॥ श्रीः ॥

# काशीखंड सारसंग्रहश्लोकाः

श्री ५ सर महाराज कृष्णप्रताप साही
बहादुर के. सी. आइ. ई. हथुआ
धीशस्य निदेशानु
सारेण.



श्रीकाश्यां

[ग]ौरीश यंत्रालये
मुद्रिताः।

संवत् १९४८.

# अथ काशीखंड सार संग्रह श्लोकाः ।

श्रीगणेशाय नमः ।

भू मिष्ठापि न यात्र भू स्त्रिदिवतोप्युच्चै
रधः स्थापिया या बद्धा भुवि मुक्तिदास्युरमृ
तं यस्यां मृता जंतवः । या नित्यं त्रिजगत्प
वित्र तटिनी तीरे सुरैः सेव्यते सा काशी त्रि
पुरारि राज नगरी पायाद् पायाज्जगत् ॥२॥

इति प्रथमोध्यायः ॥ १ ॥

वरमे ते पक्षि मृगाः पशवः काशि वासि
नः । येषां न पुनरावृत्तिर्न देवा न पुनर्भवाः ॥
॥ ७५ ॥ काशीस्थैः पतितैस्तुल्या न वयं स्व
र्गिणः क्व चित् । काश्यां पाताद्भयन्नास्ति स्व
र्गे पाताद्भयं महत् ॥ ७६ ॥ वरं काशीपुरी
वासो मासोपवसनादिभिः । विचित्रच्छत्र सं
छायं राज्यं नान्यत्र नीरिपु ॥ ७७ ॥ शशाके

मशकैः काश्यां यत्पदं हेलयाप्यते । तत्पदं
नाप्यतेन्यत्र योग युक्त्यापि योगिभिः ॥७८॥
वरं वाराणसी रंको निश्शंको यो यमादपि ॥
न वयं त्रिदशा येषां गिरितो पीदृशी दशा ॥
॥ ७९ ॥ ब्रह्मणो दिव साष्टांशे पदमैन्द्रं वि
नश्यति । स लोकपालं सार्कं च स चन्द्र
ग्रह तारकम् ॥ ८० ॥ परार्द्ध द्वय नाशेपि
काशीस्थो यो न नश्यति । तस्मात्सर्व प्रय
त्नेन काश्यां श्रेयः समाचरेत् ॥ ८१ ॥ यत्
सुखं काशिवासेत्र न तद्ब्रह्मांड मंडपे । अस्ति
चेत्तत्कथं सर्वे काशीवासाभिलाषुकाः ॥८२॥
जन्मांतर सहस्रेषु यत्पुण्यं समुपार्जितम् ।
तत्पुण्य परिवर्तेन काश्यां वासोत्र लभ्यते ॥
॥८३॥ लब्धोपि सिद्धिं नोपायाद्यदि क्रुध्येत्
त्रिलोचनः । तस्माद्विश्वेश्वरं नित्यं शरण्यं श
रणं ब्रजेत् ॥ ८४ ॥ धर्मार्थं काम मोक्षाख्यं
पुरुषार्थ चतुष्टयम् । अखंडं हि यथा काश्यां
न तथान्यत्र कुत्र चित् ॥८५॥ आलस्ये ना

पि यो यायाद्गृहाद्विश्वेश्वरा लयम्। अश्वमेधा
धिको धर्मस्तस्यास्याच्च पदे पदे ॥ ८६ ॥

श्रद्धा बीजो विप्र पादाम्बुसिक्तः शाखा
विद्यास्ताश्चतस्रो दशापि। पुष्पाण्यर्थौ द्वे फले
स्थूल सूक्ष्मे मोक्षः कामो धर्म वृक्षोय मीड्यः
॥ ९५ ॥ सर्वार्था नामत्रदात्री भवानी सर्वा
न्कामान्पूरयेदत्र ढुंढिः। सर्वान् जन्तून्मोचये
दन्त काले विश्वेशोत्र श्रोत्र मंत्रोपदेशात् ॥
॥ ९६ ॥ काश्यां धर्मस्तच्चतुष्पाद रूपः का
श्यामर्थः सोप्यनेक प्रकारः। काश्यां कामः
सर्व सौख्यैक भूमिः काश्यां श्रेयस्तत्तु किं ना
त्र यच्च ॥ ९७ ॥ विश्वेश्वरो यत्र न तत्र चि
त्रं धर्मार्थ कामा मृत रूप रूपः। स्वरूप रू
पः स हि विश्वरूप स्तस्मान्न काशी सदृशी
त्रिलोकी ॥ ९८ ॥

इति तृतीयोध्यायः ॥ ३ ॥

अविमुक्तं न मोक्तव्यं सर्वथैव मुमुक्षुभिः।
किं तु विघ्ना भविष्यंति काश्यां नि वस

तां सताम् ॥ १८ ॥ उपस्थितोयं कल्याणि सोन्तरायो महानिह । न शक्यतेन्यथा कर्तुं विश्वेशो बिमुखो यतः ॥ ११ ॥ काशी द्विजा शीर्भिरहो यदाप्ता कस्तां मुमुक्षुर्यदि वा मुमुक्षुः। ग्रासं करस्थं स विसृज्यहद्यं स्व कूर्परं लेढि विमूढ चेताः ॥ १२ ॥ अहो जना बालि श वत् किमेतां काशीं त्यजेयुः सुकृतैक राशिम्। शालूक कन्दः प्रतिमज्जनं किं लभेत तद्व त्सुलभा किमेषा ॥ १३ ॥ भवान्तरा वर्जित पुण्य राशिं कृच्छ्रैर्महद्भिर्ह्यवगम्य काशीम् । प्राप्यापि किं मूढधियोन्यतोऽपि यियासवो दुर्ग ति भुवियासवः ॥ १४॥ क्व काशिका विश्वप द प्रकाशिका क्व कार्य मन्यत्परितोति दुःखम् तत्पंडितोन्यत्र कुतः प्रयाति किं याति कूष्मां ड फलं ह्यजास्ये ॥१५॥ काशीं प्रकाशी कृत पुण्यराशिं हा शीघ्रनाशी विसृजेन्नरः किम् । नूनं स्वनूनं सुकृतं तदीयं मदीय मेवं विवृणो ति चेतः ॥ १६ ॥ नरो न रोगी यदि हा वि

हाय सहाय भूतां सकलस्य जंतोः। काशी
मनाशीः सुकृतैक राशिमन्यत्रयातुं यततां न
चान्यः ॥ १७ ॥ वित्रस्त पापां त्रिदशैर्दुरापां
गंगा सदायां भवपाश शापाम्। शिवा विमु
क्तामममृतैक शुक्ति मुक्तां विमुक्तां न परित्यज
न्ति ॥ १८ ॥ हं हो कि मं हो निचिताः प्र
लब्धा वंहीय साया सभरेण काशीम्। प्रभू
त पुण्य द्रविणैक पण्यां प्राप्यापि हित्वा क्व
च गंतु मुद्यताः ॥ १९ ॥ अहो जनानां ज
डता विहाय काशीं यदन्यत्र नयंति चेतः ॥
परिस्फुरद् गांग जलाभि रामां कामारि शूला
ग्र धृतां लयेपि ॥ २० ॥ रे रे भवे शोक ज
लैक पूर्णे पापेस्म लोकाः पतिताब्धि मध्ये।
विद्राण निद्राण विरोधि पापां काशीं परि
त्यज्य तरिं किमर्थम् ॥ २१ ॥ न सत्पथे ना
पि न योग युक्त्यादानैर्न वा नैव तपोभिरुग्रैः॥
काशी द्विजाशीर्भिरहो सु लभ्या किं वा प्र
सादे न च विश्वभर्तुः ॥ २२ ॥ धर्मस्तु संप

त्ति भरैः किलोह्यते प्यर्थो हि कामैर्बहु दान भोगकैः॥ अन्यत्र सर्वं स च मोक्ष एकः काश्यां न चान्यत्र तथा यथात्र ॥ २३ ॥ क्षेत्रं पवित्रं हि यथा विमुक्तं नान्य त्तथा यच्छ्रुतिभिः प्रयुक्तम् । न धर्म शास्त्रैर्न च तैः पुराणैस्तस्माच्छरण्यं हि सदा विमुक्तम् ॥ २४ ॥ स हो वाचेति जावालि शरुणे सिरि डामता। वरणा पिंगला नाडी तदंतस्त्व विमुक्तकम्॥ सा सुषुम्णा परा नाडी त्रयं वाराणसी त्वसौ । तदत्रोत्क्रमणे सर्वं जंतूनां हि श्रुतौ हरः ॥ ॥ २५ ॥ तारकं ब्रह्म व्याचष्टे तेन ब्रह्म भवंति हि॥ एवं श्लोको भवत्येष आहुर्वै वेद वादिनः ॥ २७ ॥ भगवानंत कालेत्र तारकस्योपदेशतः ॥ अबिमुक्ते स्थितान् जंतून् मोचयेन्नात्र संशयः ॥ २८ ॥ नाविमुक्त समं क्षेत्रं नाविमुक्त समागतिः ॥ नाविमुक्त समं लिंगं सत्यं सत्यं पुनः पुनः ॥ २९ ॥ अविमुक्तं परित्यज्य योन्यत्र कुरुते रतिं॥ मुक्तिं

करतलानमुकुत्वा सोन्यां सिद्धिं गवेषयेत् ३०
इत्थं सु नि श्चित्यमुनिर्महात्मा क्षेत्र प्रभावं
श्रुतितः पुराणं श्री विश्वनाथेन समंन लिंगं
पुरी न काशी सदृशी त्रिकोट्यां ॥ ३१ ॥
श्री कालराजं च ततः प्रणम्य विज्ञापयामास
मुनीश वर्यः ॥ आपृच्छनायाहमिहागतोस्मि
श्री काशिपुर्यास्तु यतः प्रभुस्त्वं ॥३२॥ हा
कालराज प्रतिभूतमत्र प्रत्यष्टमी प्रत्यवनी सु
तार्कैं ॥ नाराधये मूल फल प्रसूनैः किमप्य
नागस्यं पराध दृक्स्याः ॥ ३३॥ हा काल भै
रव भवानभितो भयार्तान्माभैष्ट चेति भणनै
स्वकरं प्रसार्य ॥ मूर्तिं विधाय विकटां कटु
पाप भोक्त्रीं वाराणसी स्थित जनान्परिपाति
किन्न ॥ ३४ ॥ हे यक्षराज रजनीकर चारु
मूर्ते श्री पूर्णभद्र सुत नायक दण्डपाणे ॥
त्वं वै तपोजनित दुःखमवैषि सर्वं किं मां ब
हिर्नयसि काशि निवास रक्षिन् ॥३५॥ त्वमन्न
दस्त्वं किल जीव दाता त्वं ज्ञानदस्त्वं किल

मोक्षदोपि ॥ त्वमंत्य भूषां कुरुषे जनानां ज
टा कलापैरुरगेन्द्र हारैः ॥ ३६ ॥ गणौ त्व
दीयौं किल संभ्रमोद्भ्रमावत्रस्थ दृत्तांत वि
चार कोविदौ ॥ संभ्रान्ति मुत्पाट्य परामसा
धून्क्षेत्रात्क्षणं दूरयतस्त्व मुष्मात् ॥ ३७ ॥
शृणु प्रभो ढुंढि विनायक त्वं वाचं मदीयां तु
रटाम्यनाथवत् । त्वत्स्थाः समस्ताः किल वि
घ्न पूगाः किमत्र दुर्वृत्त वदास्थितोहम्॥३८॥
शृंण्वंत्वमी पंचविनायकाश्च चिंतामाणिश्चा
पि कपर्दि नामा ॥ आशा गजाख्यौ च विना
यकौ तौ शृणो त्व सौ सिद्धि विनायकश्च ३९
परापवादो न मया किलोक्तः परापकारोपि
मया कृतो न ॥ परस्व बुद्धिः परदार बुद्धिः कृता
मयानात्र क एष पाकः ॥ ४० ॥ गंगा त्रिकालं प
रिसेविता मया श्री विश्वनाथोपि सदा विलो
कितः ॥ यात्राः कृतास्ताः प्रतिपर्व सर्वतः को
यं विपाको मम विघ्न हेतुः ॥ ४१ ॥ मातर्वि
शालाक्षि भवानि मंगले ज्येष्ठेशि सौभाग्य

विधान सुन्दरि । विश्वे विधे विश्वभुजे नमो स्तुते श्री चित्रघण्टे विकटे च दुर्गिके॥४२॥ साक्षिण्यं एताः किल काशि देवताः शृण्वन्तु न स्वार्थ महं प्रजाम्यतः । अभ्यर्थितो देव गणैः करोमि किं परोपकाराय न किं विधीयते॥ ॥ ४३ ॥ दधीचिरस्थीनि न किं पुरा ददौ जगत्त्रयं किं नददेर्थिने बलिः । दत्तःस्म किं नो मधुकैटभौ शिरो बभूव ताक्ष्योंपि च विष्णु वाहनम् ॥४४॥ आपृच्छ्य सर्वान् स मुनीन् मुनी श्वरः स बालवृद्धानपि तत्र वासिनः। तृणानि वृक्षाँश्च लताः समस्ताः पुरीं परिक्रम्य च निर्ययौ च ॥ ४५ ॥

इति पंचमोध्यायः ॥ ५ ॥

काशी कान्ती च मायाख्या त्वयोध्या द्वारवत्यपि । मथुरावंति का चैताः सप्तपुर्यो च मोक्षदाः ॥ ६८ ॥ ॥श्री शैलो मोक्षदः सर्वः केदारोपि ततोधिकः । श्री शैलाच्चापि केदारात्प्रयागं मोक्षदं परम् ॥ ६९ ॥ प्रयागा

दपि तीर्थाग्र्यादविमुक्तं विशिष्यते । यथावि
मुक्ते निर्वाणं नतथा क्वाप्य संशयम् ॥७०॥
अन्यानि मुक्ति क्षेत्राणि काशी प्राप्ति करा
णि च ॥ काशीं प्राप्यापि मुच्येत नान्यथा
तीर्थ कोटिभिः ॥ ७१ ॥

इति षष्ठोध्यायः ॥ ६ ॥

अस्य संसार दुःखस्य सर्वोपद्रव दायि
नः । उपाय एक एवास्ति काशिकानन्द भूमि
का ॥ ९९ ॥ इदं रम्यमिदं नेति बीजं दुःख
महातरोः । तस्मिन् काश्यग्नि ना दग्धे दुःख
स्यावसरः कुतः ॥ १०० ॥ प्राप्यं संप्राप्य
ते येन न भूयो येन शोच्यते। पराया निर्वृतेः
स्थानं यत्तदानंद काननम् ॥ १०१ ॥ अमृ
ताय न मुत्सृज्य पुरुषोन्यत्र यो वसेत् । आ
नंद काननं शंभोः कुतस्तस्य सुखोदयः १०२
वरं शरावहस्तस्य चांडालागार वीथिषु । भि
क्षार्थ मटनं काश्यां राज्यं नान्यत्र नीरिपु ॥
॥ १०३ ॥ वैकुंठ नगरात्काशीं नित्यं विश्वेश

मर्चितुम् । अहमायामि नियमाज्जगदर्च्यं त
दर्चिताम् ॥१०४॥ मयिया परमा शक्ति स्त्रि
लोक्या रक्षणक्षमा । तत्र हेतुर्महेशानः स सु
दर्शन चक्रदः ॥ १०५॥ पुरा जालं धरं दै
त्यं ममापि परिकम्पनम् । पादांगुष्ठाग्र रेखो
त्थं चक्रं सृष्ट्वा हरो हरत् ॥ १०६ ॥ तच्च
चक्रं मया लब्धं नेत्र पद्मार्चना द्विभोः । ए
तत्सुदर्शनाख्यं वै दैत्य चक्र प्रमर्दनम् १०७
तन्मया तव रक्षार्थं भूत विद्रावणं परम् ।
तावत्प्रणुन्नं पुरतस्ततश्चाह मिहागतः १०८
काशीमिदानीं यास्यामि विश्वेश्वर विलोकने।
अद्य याचास्ति महती कार्तिक्यां बहु पुण्यदा
॥१०९॥ कार्तिकस्य चतुर्दश्यां विश्वेशं यो
विलोकयेत् ॥ स्नात्वा चोत्तरवाहिन्यां न तस्य
पुनरागतिः ॥ ११० ॥ इत्युक्त्वा तार्क्ष्यमारो
प्य ध्रुवमानंद मे दुरम् । क्षणाद्वाराणसीं
प्राप हरि स्मरहरोषिताम् ॥१११॥ पंचक्रो
श्याश्च सीमानं प्राप्य देवो जनार्दनः । वैन

तेयादवारुह्य करे धृत्वा ध्रुवं ततः ॥ ११२॥
मणिकर्ण्यां परिस्नाय विश्वेशमभि पूज्य च।
ध्रुवं बभाषे भगवान् हितं तस्य चिकीर्षयन्
॥ ११३ ॥ लिंगं स्नापय यत्नेन क्षेत्रे त्रैवा
विमुक्तके। त्रैलोक्य स्थापनं पुण्यं यथा भव
ति ते क्षयम् ॥११४॥ नियुतं यत्परिस्थाप्य
लिंगानि फलमाप्यते। अन्यत्र तदिहैकेन लिं
गेन परि लभ्यते ॥११५॥ कालेन भंगमाप
न्नं जीर्णोद्धारं करोति यः। इह तस्य फलस्यां
तः प्रलयेपि न जायते ॥ ११६ ॥ वित्तशा
ठ्यं परित्यज्य प्रासादं योऽत्र कारयेत्। तेन
दत्तो भवेत्सर्वो मेरुर्नियुत यो जनः ॥११७॥
कूपंवापी तडागानि शक्त्या योत्र तु कारये
त्। अन्यत्र करणात्तस्य पुण्यं कोटि गुणाधि
कम् ॥ ११८ ॥ इज्यार्थमत्रयः कुर्यात्सु रम्यां
पुष्प वाटिकाम्। पुष्पे पुष्पे फलं तस्य सुव
र्ण कुसुमाधिकम् ॥ ११९ ॥ अत्र ब्रह्मपुरीं
कृत्वा यो विप्रेभ्यः प्रयच्छति। वर्षा शतेन

संयुक्तां तस्य पुण्य फलं शृणु ॥ १२० ॥ क्षी
यंते सलिलान्यब्धेर्भौमाश्च त्रसरेणवः । क्षयो
न तस्य पुण्यस्य शिव लोके समासतः १२१
मठानपि तपस्विभ्यः कारयित्वा त्र्योर्पयेत् । जी
वनोपाय संयुक्तान् सोपि पूर्व फलाश्रयः ॥
॥ १२२ ॥ कृत्वा महांति पुण्यानि योत्र वि
श्वेश्वरेर्पयेत् ॥ न तस्य पुनरावृत्तिर्घोरे संसार
सागरे ॥ १२३ ॥ अनंत इति वादोयं मयि
लोकेत्र गीयते । परं काशी गुणानां हि मया
प्यंतो नं लभ्यंते ॥ १२४ ॥ तस्मात्प्रयत्नतः
काश्यां ध्रुवं श्रेयः समाश्रयेत् । काशी श्रेयः
फलं पुंसा मक्षयायोप जायते ॥ १२५ ॥

इति एकविंशोध्यायः ॥२१ ॥

न तत्पुण्यैर्न तद्दानैर्न तपोभिर्न तज्जपैः।
न लभ्यं विविधैर्यज्ञैर्लभ्यमैशादनु ग्रहात् २३
ईश्वरानुग्रहादेव काशी वासः सु दुर्लभः । सु
लभः स्यान्मुने नूनं न वै सुकृत कोटिभिः ॥
॥ २४ ॥ भूर्लोके नैव सं लग्नं तत्क्षेत्रं त्वं तरि

क्षगम् । अयोगिनो न वीक्षंते पश्यं त्येव च योगिनः ॥ ५८॥ कृत्वा पाप सहस्राणि पिशा चत्वं वरं त्विह । न तु क्रतुशत प्राप्यः स्वर्गः काशीपुरीं विना ॥ ७१ ॥

इति पंचविंशोध्यायः ॥ २५ ॥

आब्रह्मस्तम्बपर्यन्तं यत्किंचिज्जंतु संज्ञित म्। चतुर्षु भूत ग्रामेषु काश्यां तं मुक्ति माप्स्य तु ॥ ६९ ॥ चतुर्णामपि वेदानां पुण्य मध्यय नाच्च यत् । तत्पुण्यं जायते काश्यां गायत्री ल क्ष्य जाप्यतः ॥ ८४ ॥ अन्यत्रदत्वा सर्वस्वं सुकृतं यत्समीरितम् । सहस्र भोजनात् काश्यां तद्भूयादयुताधिकम् ॥ ८९ ॥ मुक्ति क्षेत्राणि सर्वाणि यत्संसेव्योदितं फलम् । पंचरात्रात्तद त्रास्तु निषेव्य मणिकर्णिकां ॥ ९० ॥ प्रयाग स्नान पुण्येन यत्पुण्यं स्याच्छिव प्रदम् । का शी दर्शनमात्रेण तत्पुण्यं श्रद्धयास्त्विह॥९१॥ यत्पुण्यमश्वमेधेन यत्पुण्यं राजसूयतः। काश्यां तत्पुण्यमाप्नोतु त्रिरात्र शयनाद्यमी॥९२॥ तुला

पुरुष दानेन यत्पुण्यं सम्यगाप्यते ॥ काशी दर्शन मात्रेण तत्पुण्यं श्रद्धयास्तु वै ॥ ९३॥ उपपातकि नो ये च महापातकि नश्चये। तेपि काशीं समासाद्य भविष्यंति गतैन सः १०० योजनानां शतस्थोपि यो विमुक्तं स्मरेद्धृदि। बहुपातक पूर्णोपि न स पापैः प्रबाध्यते ॥ १०४ ॥ पंचक्रोशीं प्रविशतस्तस्य पातक संततिः। बहिरेव प्रतिष्ठेत नान्तर्निर्विशते क्वचित् ॥ ११४॥ अविमुक्तं महत्क्षेत्रं पंचक्रोश परीमितं। ज्योतिर्लिङ्गं तदेकं हि ज्ञेयं विश्वेश्वराभिधं ॥ १३१॥ तप्त्वा तपांसि सर्वाणि बहु कालं जितेन्द्रियैः। यत्फलं लभ्यतेन्यत्र तत्काश्यामेक रात्रतः ॥ १३४ ॥ अक्षेत्र महिमज्ञोपि श्रद्धा हीनोपि कालतः॥काशी प्रवेशादनघो मृतत्वं लभते मृतः॥ १३५ ॥ कृत्वाप्येनांसि चोग्राणि कालात्प्राप्याथ काशिकां। त्यक्त्वा तनुं प्रसादान्मे मा मेव प्रतिपद्यते ॥ १३६ ॥ विना ममप्रसादंवै कः काशीं प्रतिपद्यते । विना व्रध्नं

विशालाक्षि दिनकृत्क इहोच्यते ॥ १३७ ॥ अ
प्राप्य काशीं को देवि निरंतर सुखं लभेत्। ब्रह्मा
द्याः प्राकृतैःपाशैर्यतो बद्धा निरन्तरं ॥ १३८॥
चतुर्विंशतिभिः पाशैस्त्रिगुणैः क्रियया दृढैः ।
कंठे बध्वा विमुच्यंते कथं काशीं विनाजनाः ॥
॥ १३९ ॥ बहूपसर्गो योगोयं कृच्छ्र साध्यं त
पोहि यत्। योगाद्भ्रष्टस्तपो भ्रष्टो गर्भ क्लेश स
हः पुनः ॥१४०॥ कृत्वापि काश्यां पापानि का
श्यामेव म्रियेत चेत्। भूत्वा रुद्र पिशाचोपि पुन
र्मुक्ति मवाप्स्यति॥१४१॥ काश्यां मृतानां जन्तू
नां दैवात्पापकृतामपि। न पातो नरके तेषां तेषां
शास्ताहमेव यत्॥१४२॥ कायं विज्ञाय सापायं
स्मृत्वा गर्भस्य वेदनां। त्यक्त्वा राज्यमपिप्राज्यं
सेव्या काशी निरतरं॥ १४३ ॥ अतर्कितं सम
भ्येत्य यमदूताः सु दारुणाः । बध्वापाशैर्हनिष्यं
ति क्षिप्रं काशीं ततः श्रयेत् ॥ १४४॥ न पापे
भ्यो भयं यत्र न भयं यत्र वै यमात् । न गर्भवा
सभीर्यत्र तां काशीं को न संश्रयेत् ॥ १४५॥

अद्य प्रातः परश्वोवा मरणं प्राप्यमेव च ।
यावत्काल विलंबोस्ति तावत्काशीं समाश्रयेत्
॥ १४६ ॥ प्राप्ते तु मरणे पुंसां पुनर्जन्म पु
नर्मृत्तिः । अपुनर्भव भूमिं च तस्मात्काशीं श्र
येद्बुधः ॥ १४७ ॥ पुत्र क्षेत्र कलत्राख्यां त्य
क्त्वा मायां हि वैष्णवीम् । भवांतरे नेक रूपां भ
वघ्नीं काशिकां श्रयेत् ॥ १४८ ॥ दूरं मे मरणं यु
वाह मधुना धार्यं न चित्ते त्विति । श्रोतव्यो नि
भृतं कृतांत महिष ग्रैवेय घंटारवः ॥ नैकट्यात्प्रक
टोत्कटश्रमघटामप्राप्य हित्वा द्रुतम् । जीर्णां प
र्णकुटीं ततः पटुमतिर्गच्छेत्पुरीं धूर्जटेः ॥ १४९ ॥
इति षड्विंशोध्यायः ॥ २६ ॥

काश्यां प्रवेशं प्राप्यापि तदस्थीनि घटो
द्भव । विना वैश्वेश्वरीमाज्ञां बहिर्यातानि तत्क्षणा
त् ॥ ६७ ॥ किंविस्मृतं त्वहह गर्भज मामनस्यं
कार्तान्त दूत कृत बंधन ताडनं च । शंभोर नु
ग्रह परिग्रह लभ्य काशीं मूढो विहाय किमु या
ति करस्थ मुक्तिम् ॥ ८२ ॥ ज्ञात्वा प्रभावमतु

लं मणिकर्णिकायां यः पुद्गलं त्यजति चाशु
चि पूयगन्धि । स्वात्मावरोध महसा सहसा
मिलित्वा कल्पान्तरेष्वपि स नैव पृथक् त्वमेति
॥ ८५ ॥ रागादि दोष परिपूर मनोहृषीकाः का
शी पुरी मतुलदिव्य महा प्रभावाम् । ये कल्प
यं त्यपर तीर्थ समां समंताच्चे पापिनो न सह
तैः परि भाषणीयम् ॥ ८६ ॥ वाराणसीं स्मर
हर प्रिय राजधानीं त्यक्त्वा कुतो व्रजसि मूढ दि
गन्तरेषु । प्राप्याप्यजाद्य सुलभां स्थिर मोक्ष
लक्ष्मीं लक्ष्मीं स्वभाव चपलां किमु कामयेथाः
॥८७॥विद्या धनानि सदनानि गजाश्वभृत्या स्रक्
चंदनानि वनिताश्च नितांत रम्याः ।स्वर्गोप्य
गम्य इह नोद्यमभाजि पुंसि वाराणसी त्व सुलभा
शलभादि मुक्तिः॥८८॥स्थिरापायं कायं जननम
रण क्लेश निलयम् । विहायास्यां काश्यामहहप
रि गृह्णीत न कुतः ॥ वपुस्तेजोरूपं स्थिरतर प
रानंद सदनम् । विमूढो सौ जंतुः स्फुटितमिव
कांस्यं विनिमयन् ॥ ९१ ॥ अहो लोकः शाके

किमिह सह ते हंत हत धीः। विपद्वारैः सारैर्नि
यत निधनैर्ध्वंसित धनैः। क्षितौ सत्यां काश्यां
कथयति शिवो यत्र निधनैः। श्रुतौ किं चिद्भू
यः प्रविशति न ये नोदर दरीम्॥ ९२॥ ना
स्तीह दुष्कृत कृतां सुकृतात्मनां वा का चिद्वि
शेषगतिरंत कृतां हि काश्याम्। बीजानि कर्म
जनितानि यदूषरायां ना कूरयंति हर दृग्ज्वलि
तानि तेषां॥ ९४॥ शशका मशका वकाः शु
काः कलविंकाश्च वृकाः स जंबुकाः। तुरगो रग
वानरा नरा गिरिजे काशि मृताः परामृतम्
॥ ९५॥ अरुद्र रुद्राक्ष फणीन्द्र भूषणास्त्रिपुंड्र
चंद्रार्ध धराधरांगताः। निरंतरं काशि निवासि
नो जनाः गिरीन्द्रजे पारिषदामता मम॥९६॥
यावंत एव निवसंति च जंतवोच काश्यां जल
स्थल चरा झष जंबुकाद्याः। तावंत एव मदनु
ग्रह रुद्र देहा देहावसानमधिगम्यमयि प्रवि
ष्टाः॥॥ ९७॥ ॥ ॥

इति त्रिंशोध्यायः॥ ३०॥

प्रादुर्भावं भैरवस्य महापातक नाशनम्।
यच्छ्रुत्वा काशि वासस्य फलं निर्विघ्नमाप्नुया
त् ॥ ८ ॥ ऋगुवाच ॥ यदन्तस्थानि भूता
नि यतः सर्वं प्रवर्त्तते ॥ यदाहुस्तत्परं तत्वं स
रुद्रस्त्वेक एव हि ॥ २४ ॥ यजुरुवाच ॥ यो
यज्ञैरखिलैरीशो योगेन च समिज्यते । येन प्र
माणं हि वयं स एकः सर्व दृक् शिवः ॥२५॥
साम उवाच ॥ येनेदं भ्राम्यते विश्वं योगिभि
र्यो विचिन्त्यते । यद्भासा भास्यते विश्वं स
एक त्र्यंबकः परः ॥ २६ ॥ अथर्व उवाच॥
यं प्रपश्यंति देवेशं भक्त्यानुग्रहिणो जनाः ।
तमाहुरेकं कैवल्यं शंकरं दुःख तस्करम् ॥२७॥
या मे मुक्ति पुरी काशी सर्वाभ्योपि गरीयसी।
आधिपत्यं च तस्यास्ते कालराज स दैवहि॥
॥ ४८ ॥ तत्र ये पाप कर्तारस्तेषां शास्ता त्व
मेव हि । शुभाशुभं न तत्कर्म चित्रगुप्तो लि
खिष्यति ॥ ४७ ॥ तावद्गर्जंति पापानि ब्रह्मह
त्यादि कान्यलम् । यावन्नामन शृण्वंति काश्याः

पापाचलाशने ॥ ६५ ॥ यश्चिंतयाति पुण्यात्मा तव पादांबुज द्वयम् । ब्रह्महत्यादिकमपि पापं तस्य व्रजेत् क्षयम् ॥ ९५ ॥ अनेनापि मिषे नाहं संसेव्यामु वृषध्वजम् ॥ आत्मानं पावयिष्यामि क्क पुनर्भव दर्शनम् ॥१०४॥ यत्र स्थितानां जन्तूनां कलां नार्हन्ति षोडशीम् । अपि ब्रह्मादि देवानां पदानि विपदां पदम् ॥११३॥ वरं वाराणसी वासी जटी मुंडी दिगंबरः । नान्यत्र छत्र संछन्न वसुधा मंडलेश्वरः ॥११४॥ वरं वाराणसी भिक्षा न लक्ष्याधिपतान्यतः ॥ लक्ष्याधीशो विशेद्गर्भे तद्भिक्षाशी न गर्भ भाक् ॥ ११५ ॥ वाराणस्यां निवसतां यत्पुण्यमुप जायते । तदेव संवासयितुः फलं त्वंविकलं भवेत् ॥ ११९ ॥ ब्रह्महत्यादि पापानि यस्यानाम्नोप कीर्तनात् । त्यजंति पापिनं काशी सा केनेहोपमीयते ॥ १२० ॥ वाराणसीति काशीति महामंत्रमिमं जपन् । यावज्जीवं त्रिसंध्यं तु जंतुर्जातु न जायते ॥ १२८ ॥ अविमुक्तं

महाक्षेत्रं स्मरन्प्राणांस्तु यस्त्यजेत् । दूर देशा न्तरस्थोपि सोपि जातु न जायते ॥ १२७ ॥ आनंद कानने यस्य चित्तं संस्मरते सदा । तत्क्षेत्रनामश्रवणान्न स भूयोभि जायते॥१२८॥ इयं काशी पुरी विप्र साक्षाद्रुद्र तनुः परा । अनिर्वाच्या परानंदादुष्प्राप्येश विरोधिभिः १३४

इति एकत्रिंशोध्यायः ॥ ३१ ॥

मात्रा पित्रा परित्यक्ता येत्यक्ता निज बंधुभिः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ ७४ ॥ जरयापरि भूताये ये व्याधि विकली कृताः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ ७५ ॥ पदे पदे समाक्रांता ये विपद्भिरहर्निशम् । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥७६॥ पापराशि भिराक्रांता ये दारिद्य पराजिताः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥७७॥ संसार भयभीता ये ये बद्धाः कर्म बंधनैः येषां क्वापिगतिर्नास्ति तेषां वाराणसी गतिः ॥७८॥ श्रुति स्मृतिवि

हीना ये शौचाचार विवर्जिताः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ ७९ ॥ ये च योग परिभ्रष्टास्तपोदान विवर्जिताः । येषां० ॥ ८० ॥ मध्ये बंधु जने येषामपमानं पदे पदे । तेषामानंददं चैकं शंभोरानंद काननम् ॥ ८१ ॥ आनन्द कानने येषां रुचिर्वै वसतां सतां ॥ विश्वेशानुगृहीतानां तेषामानंदजो दयः ॥ ८२ ॥ भर्ज्यन्ते कर्म बीजानि यत्र विश्वेश वन्हिना । अतो महाश्मशानंत दगतीनां परागतिः ॥ ८३ ॥ देवदेव उवाच ॥ यथा प्रियतमा देवि मम त्वं सर्व सुन्दरि । तथा प्रियतरं चैतन्मे सदानन्द काननम् ॥ १११ ॥ अत्रानंदवने देवि मृतानां मदनुग्रहात् । वपुस्त्वमृततांप्राप्तमपुनर्भविनस्तुते ॥ ११२ ॥ भाविनो ये विपद्यन्ते वाराणस्यां ममाज्ञया । तेषां बीजानि दग्धानि श्मशान ज्वलदग्निना ॥ ११३ ॥ महाश्मशाने ये प्राप्ता दीर्घ निद्रां गिरीन्द्रजे । न पुनर्गर्भ शयने ते स्वपंति कदाचन ॥ ११४ ॥

ब्रह्म ज्ञानेन मुच्यंते नान्यथा जंतवः क्व चित्
ब्रह्मज्ञान मये क्षेत्रे प्रयागे वा तनुत्यजः११५
ब्रह्मज्ञानं तदेवाहं काशी संस्थिति भागिनाम्।
दिशामितारकं प्रांते मुच्यंते ते तुतत्क्षणात्।
॥ ११६ ॥ गृह्लीयुः पाप कर्माणि काशीमृत वि
निंदकाः। सुकृतानि स्तुति कृतो मुच्यंते तत्र
जन्तवः ॥ ११७ ॥ ब्रह्मज्ञानं कुतो देवि कालि
नोप हतात्मनां। स्वभाव चंचला क्षाणां तद्ब्रह्मे
ह दिशाम्यहम् ॥ ११८॥ योगिनो योग विभ्र
ष्टाः पतंत्यैश्वर्य मोहिताः। काश्यां पतित्वा न
पुनः पतंत्यपि महालये ॥ ११९ ॥ ब्रह्मज्ञानं न
विन्दंति योगैरेकेन जन्मना। जन्मनैकेन मुच्यं
ते काश्यामंत कृतो जनाः ॥ १२० ॥ यथेह
मुच्यते जंतुर्गिरिजे मदनुग्रहात्। अविमुक्ते म
हाक्षेत्रे न तथान्यत्र कुत्र चित् ॥ १२१ ॥ बहु
जन्म समभ्यासाद्योगी मुच्येत वान वा ।
मृतमात्रो विमुच्येत काश्यामेकेन जन्मना१२२
न सिद्ध्यति कलौ योगो न सिद्ध्यति कलौ तपः।

न्यायार्जित धनोत्सर्गः सद्यः सिद्धेत्कलौ नरः ॥ १२३ ॥ न व्रतं न तपो नेज्या न जपो न सुरार्चनं । दानमेव कलौ मुक्त्यै काशीदानैरवाप्यते ॥ १२४ ॥ कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी। कलौ भागीरथी गंगा कलौ दानं विशिष्यते ॥ १२५ ॥ गंगोत्तर वहा काश्यां लिंगं विश्वेश्वरं मम । उभे विमुक्तिदे पुंसां प्राप्ये दान बलात्कलौ ॥ १२६ ॥ पुण्यवानितरो वापि मम क्षेत्रस्य सेवया । मुक्तो भवति देवेशि नात्र कार्या विचारणा ॥ १२७ ॥ अविमुक्तस्य माहात्म्यात्पुण्य पापेन कर्मणा । देवि प्रभवतः पुंसामपि जन्म शतार्जिते ॥ १२८ ॥ अविमुक्तं न मोक्तव्यं तस्माद्देवि मुमुक्षुणा । हन्य मानेन बहुधाह्युपसर्ग शतैरपि ॥ १२९ ॥ विधाय क्षेत्र संन्यासं ये वसंतीह मानवाः । जीवन्मुक्तास्तुते देवि तेषां विघ्नं हराम्यहम् १३० न योगिनां हृदाकाशे न कैलासे न मन्दरे । तथा वासरतिर्मेस्ति यथा काश्यां रतिर्मम १३१

काशी वासि जनो देवि मम गर्भे वसेत्सदा ।
अतस्तं मोचयाम्यंते प्रतिज्ञेयं यतो मम १३२
तामसीं प्रकृतिं प्राप्य कालो भूत्वा चराचरम् ।
ग्रसामि लीलया देवि काशीं रक्ष्यामि यत्नतः ॥
॥ १३३ ॥ प्रेम पात्र द्वयं देवि नितरां नेतर
न्मम । त्वं वा तपोधनेगौरि काशी वा नंद भूमि
का ॥ १३४ ॥ विना काशीं न मे स्थानं विना
काशीं न मे रतिः । विना काशीं न निर्वाणं स
त्यं सत्यं वदाम्यहम् ॥ १३५ ॥ ब्रह्मांड गोल
केयद्वन्मुक्तिः काश्यां व्यवस्थिता । अष्टांग यो
गयुक्त्या वा न तथा हेलयान्यतः ॥ १३६ ॥
रत्न भद्रांगजोद्भूत पूर्ण भद्र सुतोत्तम । नि
र्विघ्नं कुरुमे यक्ष काशी वासं शिवाप्तये १६९
धन्यो यक्षः पूर्ण भद्रो धन्या कांचन कुडला ।
ययोर्जठर पीठे भूर्दण्डपाणे महामते ॥ १७० ॥
जय यक्षपते धीर जय पिंगल लोचन । जय
पिंग जटा भार जय दंड महायुध ॥ १७१ ॥
अविमुक्त महाक्षेत्र सूत्रधारोग्र तापस । दंड ना

यक भीमास्य जय विश्वेश्वर प्रिय ॥ १७२ ॥
सौम्यानां सौम्य वदन भीषणानां भयानक ।
क्षेत्र पापधियां काल महाकाल महाप्रिय १७३
जय प्राणद यक्षेंद्र काशी वासान्न मोक्षद । म
हारत्न स्फुरद्रश्मि चयचर्चित विग्रह ॥१७४॥
महा सम्भ्रान्ति जनक महोद्भ्रांति प्रदायक ।
अभक्तानां च भक्तानां संभ्रान्त्युद्भ्रांति नाशक
॥ १७५ ॥ प्रांत नेपथ्य चतुरजय ज्ञान नि
धिप्रद । जय गौरी पदाब्जाले मोक्षे क्षण विचक्ष
ण ॥ १७६ ॥ यक्षराजाष्टकं पुण्यमिदं नित्यं
त्रिकालतः । जपामि मैत्रा वरुणे वाराणस्या
प्ति कारणम् ॥ १७७ ॥ दंडपाण्यष्टकं धीमान्
जपन्नविघ्नैर्न जातु चित् । श्रद्धया परिभूयेत का
शी वास फलं लभेत् ॥ १७८ ॥ ॥ ॥

इति द्वात्रिंशोध्यायः ॥ ३२ ॥

विश्वेश्वर उवाच ॥ त्रिलोक्यां यानि ती
र्थानि भूर्भुवः स्वः स्थितान्यपि । तेभ्यो खिले
भ्यस्तीर्थेभ्यः शिवतीर्थमिदं परम् ॥३१॥ शि

वं ज्ञानमिति ब्रूयुः शिव शब्दार्थ चिंतकाः । त
च्च ज्ञानं द्रवीभूतमिहमे महिमोदयात् ॥ ३२॥
अतो ज्ञानो दनामैतत्तीर्थं त्रैलोक्य विश्रुतम् ।
अस्य स्पर्शन मात्रेण सर्व पापैः प्रमुच्यते ३३
ज्ञानोद तीर्थ संस्पर्शादश्वमेध फलं लभेत्। स्प
र्शनाचमनाभ्यां च राजसूयाश्वमेधयोः ॥३४॥
फल्गुतीर्थे नरः स्नात्वा सन्तर्प्यंच पितामहान्।
यत्फलं समवाप्नोति तदत्र श्राद्ध कर्मणा॥३५॥
गुरु पुष्यासिताष्टम्यां व्यतीपातो यदा भवेत् ।
तदात्र श्राद्धकरणाद्गया कोटि गुणं भवेत् ३६
यत्फलं समवाप्नोति पितॄन्संतर्प्य पुष्करे । त
त्फलं कोटि गुणितं ज्ञान तीर्थे तिलोदकैः ३७
सन्निहत्यां कुरुक्षेत्रे तमोग्रस्ते विवस्वति । यत्फ
लं पिंड दानेन तज्ज्ञानोदे दिने दिने ॥३८॥ पिं
ड निर्वपणं येषां ज्ञान तीर्थे सुतैः कृतम् । मोद
न्ते शिवलोके ते यावदा भूत संप्लवम् ॥ ३९ ॥
अष्टम्यां च चतुर्दश्यामुपवासी नरोत्तमः । प्रा-
तः स्नात्वाथ पीताम्भस्त्वन्तर्लिङ्ग मयो भवेत्॥

॥ ४० ॥ एकादश्यामुपोष्यांत्र प्राश्नाति चुलुक त्रयम्। हृदये तस्य जायंते त्रीणि लिंगान्य संशयम् ॥ ४१ ॥ ईशान तीर्थे यः स्नात्वा विशेषात्सोम वासरे। संतर्प्य देवर्षि पितॄन्दत्वा दानं स्वशक्तितः ॥ ४२ ॥ ततः समर्च्य श्री लिंगं महा संभार विस्तरैः। अत्रापि दत्वानानार्थानूकृत कृत्यो भवेन्नरः ॥ ४३ ॥ उपास्य सन्ध्यां ज्ञानोदे यत्पापं काल लोपजम्। क्षणेन तदपाकृत्य ज्ञानवान् जायते द्विजः ॥ ४४ ॥ शिवतीर्थमिदं प्रोक्तं ज्ञांनतीर्थं मिदं शुभम्। तारकाख्य मिदं तीर्थं मोक्ष तीर्थं मिदं ध्रुवम् ॥ ४५ ॥ स्मरणादपि पापौघो ज्ञांनोदस्य क्षयेद्ध्रुवम् । दर्शनात्स्पर्शनात्स्नानात्पानाद्धर्मादि संभवः ॥ ४६ ॥ डाकिनी शाकिनी भूत प्रेत वेताल राक्षसाः। ग्रहाः कूष्मांड झोटिंगाः कालकर्णी शिशु ग्रहाः ॥ ॥ ४७ ॥ ज्वरापस्मारविस्फोट द्वितीयक चतुर्थकाः। सर्वे प्रशम मायांति शिव तीर्थ जलेक्षणात् ॥ ४८ ॥ ज्ञानोद तीर्थ पानीयैर्लिंगं यस्नापये

त्सुधीः। सर्वतीर्थोदकैस्तेन ध्रुवं संस्नापितं भवे
त् ॥ ४९ ॥ ज्ञानरूपोह मेवात्र द्रवमूर्तिं विधा
य च। जाड्य विध्वंसनं कुर्यां कुर्यां ज्ञानोप देश
नम् ॥ ५० ॥ इति दत्वावराञ्छंभुस्तत्रैवान्तर
धीयत । कृत कृत्य मिवात्मानं सोप्यमंस्त त्रि
शूल भृत् ॥ ५१ ॥ ईशानो जटिलो रुद्रस्त
त्प्राश्य परमोदकम्। अवाप्तवान्परं ज्ञानं येन
निर्वृति माप्तवान् ॥५२॥ मरणं मंगलं यत्र स
फलं यत्र जीवितम् । स्वर्गस्तृणायते यत्रसैषा
श्री मणिकर्णिका ॥ १०३ ॥

इति त्रयस्त्रिंशोध्यायः ॥ ३३॥

स्कंद उवाच ॥ पुनर्ददर्शतन्वंगी चित्र
पट्यां घटोद्भव स्वर्ग द्वारात्पुरोभागे श्रीमतीं म
णिकर्णिकाम् ॥१॥ संसार सर्प दष्टानां जंतूनां
यत्र शंकरः । अपसव्येन हस्तेन ब्रूते ब्रह्म स्पृ
शन् श्रुतिं ॥२॥ न कापिलेन योगेन न सांख्ये
न न च व्रतैः। यागतिः प्राप्यते पुंभिस्तांदद्या
न्मोक्ष भूरियम् ॥ ३ ॥ वैकुंठ विष्णु भवने वि-

ष्णु भक्ति परायणाः । जपेयुः सततंमुक्त्यै श्री
मतीं मणिकर्णिकाम् ॥४॥ हुत्वाग्निहोत्रमपि च
यावज्जीवं द्विजोत्तमाः । अंते श्रयंते मुक्त्यैयां से
यं श्री मणिकर्णिका ॥५॥ वेदां पठित्वा विधिव
द्ब्रह्मयज्ञ रता भुवि । यां श्रयंति द्विजामुक्त्यै
सेयं श्री मणिकर्णिका ॥ ६ ॥ इष्ट्वा क्रतूनपि
नृपा बहून्पर्याप्त दक्षिणान् । श्रयंते श्रेय से ध
न्याः प्रांतेधि मणिकर्णिकम् ॥७॥ सीमंतिन्यो
पि सततं पतिव्रत परायणाः । मुक्त्यैपति
मनुव्रज्यं श्रयंति मणिकर्णिकाम् ॥८॥ वैश्या अ
पि च सेवंते न्यायोपार्जित संपदः । धनानि साधु
सात्कृत्वा प्रांते श्री मणिकर्णिकाम् ॥९॥ त्यक्त्वा
पुत्र कलत्रादि सच्छूद्रा न्याय मार्गगाः । नि
र्वाण प्राप्तये चैनां भजेयुर्मणिकर्णिकाम्॥१०॥
यावज्जीवं चरं तोपि ब्रह्म चर्यं जितेंद्रियाः ।
निःश्रेयसे श्रयंत्येनां श्रीमतीं मणिकर्णिकाम् ११
अतिथीनपि संतर्प्य पंचयज्ञरता अपि । गृह
स्थाश्रमिणोनेमां त्यजेयुर्मणिकर्णिकाम् ॥१२॥

वान प्रस्थाश्रमयुजो ज्ञात्वा निर्वाण साधनम्।
सन्नियम्येंद्रिय ग्रामं मणिकर्णिमुपासते ॥१३॥
अनन्य साधनां मुक्तिं ज्ञात्वा शास्त्रैरनेकधा ।
मुमुक्षुभिस्त्वेक दंडैः सेव्यते मणिकर्णिका॥१४॥
दण्डयित्वा मनो वाचं कायं नित्यं त्रिदंडिनः।
नैश्रेयसीं श्रियं प्राप्तुं श्रयंतेमणिकर्णिकाम् १५
सन्यस्ताखिलकर्माणो दंडयित्वा चलं मनः ।
एक दंड ब्रता मुक्त्यै भजेयुर्मणिकर्णिकाम् १६॥
शिखी मुंडी जटी वापि कौपीनी वा दिगंबरः।
मुमुक्षुः को न सेवेत मुक्तिदां मणिकर्णिकाम् १७
तपः कर्तुं न शक्ताये दानं वा दातुमक्षमाः । यो
गाभ्यास विहीनाये तेषामेषा विमुक्तिदा॥१८॥
संत्युपायाः सहस्त्रं तु मुक्तये न तथामुने । हे
लयैषा यथा दद्यान्निर्वाणंमणिकर्णिका ॥१९॥
अनशन ब्रत भृते त्रिकालाभ्यवहारिणे । प्रांते
दद्यात्समां मुक्तिमुभाभ्यांमणिकार्णिका ॥२०॥
यथोक्तमाचरेदेकोनिष्ठा पाशुपतं ब्रतम् । नि
रंतरं स्मरेदेको हृद्येनां मणिकर्णिकाम्॥ २१ ॥

दृष्टात्र वपुषः पाते द्वयोश्च सदृशी गतिः । त
स्मात्सर्वं विहायाशु सेव्यैषा मणिकर्णिका ॥२२॥
यदन्वये कोपि मुक्तः संप्राप्य मणिकर्णिकाम् ।
तद्वंश्यास्तत्प्रभावेण मान्याः स्वर्गौकसामपि
३२ तर्पिता पितरो येन संप्राप्य माणिकर्णिकाम्।
सप्त सप्त तथा सप्त पूर्वजास्तेन तारिताः ॥
॥ ३३ ॥ आमध्याद्देवसरित आ हरिश्चन्द्र
मंडपात् । आगंगा केशवादाच स्वर्द्वारान्माणि
कर्णिका ॥ ३४ ॥

इति चतुस्त्रिंशोध्यायः ॥ ३४ ॥

मासि मासि यदाप्येत व्रताच्चान्द्रायणा
त्फलम् अन्यत्र तदिहाप्येत भूतायां नक्त भोज
नात् ॥ १२ ॥ मासोपवासादन्यत्र यत्फलं स
मुपार्ज्यते । श्रद्धयैकोपवासेन तत्काश्यांस्याद
सशयं ॥ १३ ॥ अविमुक्तेश्वरं लिंगं स्मृत्वा दूर
गतोपि च । जन्मद्वय कृतात्पापात्क्षणादेव विमु
च्यते ॥८२॥ अविमुक्ते महाक्षेत्रे विमुक्त मवलो
क्य च । त्रिजन्म जनितं पापं हित्वा पुण्य मयो

भवेत् ॥ ८३ ॥ यत्कृतं ज्ञान विभ्रंशादेनः पंच सु जन्मसु । अविमुक्तेश संस्पर्शात्तत्क्षये देवना न्यथा ॥ ८४ ॥ किं बिभेति नरो धीरः कृतादघ शिलोच्चयात् । अविमुक्तेश लिंगस्य भक्ति वज्र धरो यदि॥ ९१ ॥ का विमुक्तं महालिंगं चतुर्वर्ग फलोदयं । क्व पापि पाप शैलोल्पो यःक्षयेन्नाम संभृतः ॥ ९२ ॥ अविमुक्ते महाक्षेत्रे विश्वेश समधिष्ठिते । यैर्न दृष्टं विमूढास्ते विमुक्तं लिंग मुत्तमम्॥ ९३ ॥द्रष्टारमविमुक्तस्य दृष्ट्वा दंड धरो यमः । दूरादेव प्रणमति प्रबद्ध कर संपुटः ॥ ९४ ॥ त्रिसंध्यमविमुक्तेशं यो जपेन्नियतः शुचिः । दूरदेश विपन्नोपि काशी मृत फलं लभेत् ॥ ९६ ॥

इति एकोनचत्वारिंशोध्यायः ॥ ३९ ॥

न शब्द शास्त्राभिरतस्यमोक्षो न चैव रम्या वसथ प्रियस्य। न भोजनाच्छादनतत्परस्य न लोकवित्त ग्रहणे रतस्य ॥१६०॥ एकांत शी लस्य स दैव तस्य सर्वेन्द्रिय प्रीति निवर्तकस्य ।

स्वाध्याय योगे गत मानसस्य मोक्षो ध्रुवं नित्य महिंसकस्य ॥१६१॥ क्वै कान्त शीलत्व मिहास्ति पुंसः क्व चेन्द्रिय प्रीति निवृत्तिरस्ति । क्व योग युक्तिः क्वं च दैव तेज्या काश्यां विनैभिः सहजेन मुक्तिः ॥ १६२ ॥ विश्वेश संशीलन मेव योगस्तपश्च विश्वेशपुरी निवासः। व्रतानि दानं नियमा यमाश्च स्नानं द्युनद्यां यदुदग्वहायां ॥ १६३ ॥ स्कंद उवाच ॥ न्यायागत धनस्तत्वज्ञान निष्ठो तिथि प्रियः। श्राद्धकृत्सत्यवादीं च गृहस्थोपीह मुच्यते ॥ १६४ ॥ दीनांध कृपणार्थिभ्यो दत्वान्नानि विशेषतः। कृत्वा गार्ह्याणि कर्माणि गृहस्थः श्रेय आप्नुयात् १६५ इत्थमाचरतां पुंसां काशीनाथः प्रसीदति। काशीनाथ प्रसादेन काशी प्राप्तिस्तु मोक्ष कृत् ॥ ॥१६६॥ स सर्व तीर्थ सुस्नातः स सर्व क्रतु दीक्षितः। स दत्त सर्व दानस्तु काशी येन निषेविता ॥ १६७ ॥

इति चत्वारिंशत्तमोध्यायः ॥ ४० ॥

ध्यानं शौचं तथा भिक्षा नित्यमेकान्त शीलता। यतेश्चत्वारि कर्माणि पंचमं नोपपद्यते ॥२०॥ कुसुंभ वासा दंडाढ्यो भिक्षाशीख्याति वर्जितः। अलावुदारु मृद्वेणु पात्रं शस्तं न पंचमम् ॥२४॥ आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत्। किं तस्यानेक तंत्रेण कृत कृत्यः स जायते ॥ ३० ॥ संचितं यद्गृहस्थेन पापमा मरणान्तिकम्। निर्धक्ष्यति हितत्सर्व मेक रात्रोषितोयतिः॥३१॥संयोगस्त्वात्ममनसोर्योग इत्युच्यते बुधैः। प्राणापान समायोगो योग इत्यपि कैश्चन ॥४८॥ विषयेंद्रिय संयोगो योग इत्यप्य पंडितैः। विषयासक्त चित्तानां ज्ञानं मोक्षश्च दूरतः ॥४९॥ स्वसंवेद्यं हितद्ब्रह्म कुमारी स्त्री सुखं यथा। अयोगी नैव तद्वेत्ति जात्यंध इव वर्तिकाम् ॥ ५५ ॥ नित्याभ्यसन शीलस्य स्वसंवेद्यं हितद्भवेत्। तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् ॥ ५६ ॥ क्षणमप्येक मुद कं यथा न स्थिरतामियात्। वाताहतं यथा चित्तं

तस्मात्तस्य न विश्वसेत् ॥ ५७ ॥ आकाशं च मरीचि वारि सदृशं यद्ब्रह्मरंध्र स्थितम् । यन्नाथेन सदा शिवेन सहितं शांता हकाराक्षरम् ॥ प्राणं तत्र विनीय पंच घटिकं चिंतान्वितं धारयेदेषामोक्ष कपाट पाटन पटुः प्रोक्ता न भो धारणा ॥ ११७ ॥ एकेन जन्मना योगः कथमित्थं प्रसिद्ध्यति । ऋते च योग संसिद्धेः कथं मुक्तिरिहाप्यते ॥१६६॥ उभे एव हि निर्वाण वर्त्मनी किल कुंभज । किं वा काश्यां तनु त्यागः किं वा योगोयमीदृशः ॥ १६७ ॥ चंचलेन्द्रिय वृत्तित्वात् कलि कल्मष जृंभणात् । अल्पायुषां तथा नृणां क्वेह योग महोदयः १६८ अतएव हि जंतूनां महोदय पद प्रदः । सदैव सदया वार्धिः काश्यां विश्वेश्वरः स्थितः ॥१६९॥ काश्यां सुखेन कैवल्यं यथालभ्येत जन्तुभिः । योग युक्त्या ह्युपायैश्च न तथान्यत्र कुत्र चित् १७०॥ काश्यां सुदेह संयोगः सम्यग्योग उदाहृतः । मुच्यते नेह योगेन क्षिप्रमन्येन केन चित् ॥

॥ १७१ ॥ विश्वेश्वरो विशालाक्षी ढुचनदी का लभैरवः । श्रीमान्ढुंढिर्दण्डपाणिः षडंगो योग एष वै ॥ १७२ ॥ एतत्षडंगं यो योगं नित्यं काश्यां निषेवते । संप्राप्य योग निद्रां स दीर्घाममृतमश्नुते ॥१७३॥ ॐ कारः कृत्तिवासाश्च केदारश्च त्रिविष्टपः । वीरेश्वरोथ विश्वेशः षडंगोय मिहापरः ॥ १७४ ॥ पादोदकासि संभेद ज्ञानोद मणिकर्णिकाः । षडंगोयं महायोगो ब्रह्म धर्म हृदावपि ॥१७५॥ षडंग सेवनादस्माद्वाराणस्यां नरोत्तम । न जातु जायते जंतुर्जननी जठरे पुनः ॥ १७६ ॥ गंगा स्नानं महामुद्रा महापातक नाशिनी । एतन्मुद्राकृताभ्यासो प्यमृतत्वमवाप्नुयात् ॥१७७॥ काशी वीथिषु संचारो मुद्रा भवति खेचरी । खेचरो जायते नूनं खेचर्या मुद्रयानया ॥ १७८ ॥ उड्डीय सर्वतो देशाद्यानं वाराणसीं प्रति । उड्डीयानो महाबंध एष मुक्त्यै प्रकल्पते ॥१७९॥ जलस्य धारणं मूर्ध्नि विश्वेश स्नान जन्मनः । एष जालंधरो

बंधः समस्त सुर दुर्लभः ॥ १८० ॥ वृतो विघ्न शतेनापि यन्न काशीं त्यजेत्सुधीः । मूल बंधः स्मृतोह्येष दुःख मूल निकृन्तनः ॥१८१॥ इति योगः समाख्यातो मयाते द्विविधो मुने । स षडंगः समुद्दश्च मुक्तये शंभु भाषितः॥१८२॥ यावन्नेन्द्रिय वैकल्यं यावद्व्याधिर्न बाधते । याव त्काल विलंबोस्ति तावद्योग रतो भवेत् १८३ उभयोर्योग योर्मध्ये काशी योगोय मुत्तमः । काशीं योगं समभ्यस्य प्राप्नुयाद्योग मुत्तमम् ॥ १८४ ॥ आधि व्याधि सहायिन्या जरया मृत्यु लिंगया । कालं निकटतो ज्ञात्वा काशी नाथं समाश्रयेत् ॥ १८५ ॥ काशीनाथं समा श्रित्य कुतः काल भयं नृणाम् । क्रुद्धोपि जीव हृत्कालस्तत्र काश्यां सुमंगलम् ॥ १८६ ॥ आ तिथ्ये नेहसि यथा प्रतीक्षेता तिथिं कृती । काश्यां कालं तथा यांतं भाग्यवान्संप्रतीक्षते ॥१८७॥ कलिः कालः कृतं कर्म त्रिकंटकमिती रितम् । एतत्त्रयं न प्रभवे दानं दवन वासिनाम्

॥१८८॥ अन्यत्रा तर्कितः कालः कलयिष्यत्य संशयं। कालादभय मिच्छेच्चेत्ततः काशीं समाश्रयेत्॥ १८९ ॥

इति एकचत्वारिंशोध्यायः ॥४१॥

तावद्गर्जंति पापानि तावद्गर्जेद्यमो नृपः॥ यावद्विश्वेश शरणं नरो न निरतो व्रजेत् ४२ कः कलिः कोथवा कालः काजरा किं च दुष्कृतम् ॥ कारुजः केंतरायावा श्रिता वाराणसी यदि ॥५५॥ वरं काशी समावासी नासी नोद्युसदां पदम् । दुःखांतं लभते पूर्वः सुखांतं लभते परः ॥५९॥

द्विचत्वारिंशोध्यायः ॥ ४२ ॥

अयि काशिमुदा कदा पुनस्तवलप्स्ये सुख मंग संगजम् ॥ अति शीतलतानि येन मेद्भुत गात्राणि भवंति तत्क्षणात् ॥ १७ ॥ अयि काशि विनाशिताघ संघे तव विश्लेषज आशु शुक्षणिः ॥ अमृतांशु कला मृदु द्रवैरति

चित्रं हविषेव बर्द्धते ॥ १८ ॥ न यत्र काश्यां कलिकालजं भयं न यत्र काश्यां मरणात् पुनर्भवः । न यत्र काश्यां कलुषोद्भवं भयं कथं विभो सा नयना तिथिर्भवेत् ॥३१॥ किमत्र नो संति पुरः सहस्रशः पदे पदे सर्व समृद्धि भू मयः । परं न काशी सदृशी दृशोः पदं क्क चिद्गता मे भवताशपे शिव ॥ ३२ ॥ त्रिविष्टपे संति न किं पुरः शतं समस्त कौतूहल जन्म भू मयः । तृणी भवंतीह चताः पुरः पुरः पदं पुरारे भवतो भवद्विषः ॥ ३३ ॥ न मुक्तिरस्तीह तथा समाधिना स्थिरेन्द्रियत्वोज्झित तत्समाधिना । क्रतु क्रियाभिर्न न वेद विद्यया यथा हि काश्यां परिहाय विग्रहम् ॥ ३७ ॥ ननाक लोके सुखमस्ति तादृशं कुतस्तु पाताल तलेऽति सुंदरे । वार्तापि मर्त्ये सुख संश्रया क्व वा काश्यां हि या दृक् तनुमात्र धारिणिं ॥ ३८ ॥ वरं हि तिर्यक्त्वमबुद्धि वैभवं न मानवत्वं बहु बुद्धि भाजनं । अकाशि संदर्शन निष्फलोदयं समं ततः पुष्कर बुद्बुदो

पमम् ॥ ४१ ॥ दृशौ कृतार्थे कृत काशि दर्शने तनुः कृतार्था शिव काशि वासिनी । मनः कृतार्थं धृत काशि संश्रयं मुखं कृतार्थं कृत काशि संमुखं ॥ ४२ ॥ वरं हितत्काशिरजोति पावनं रजस्तमो ध्वंसि शशि प्रभो ज्वलम् । कृत प्रणामैर्मणिकर्णिका भुवे ललाटगं यद्बहु मन्यते सुरैः ॥ ४३ ॥ न देव लोको न च सत्य लोको न नाग लोको मणिकर्णिकायाः । तुलां व्रजेद्यत्र महा प्रयाण कृच्छ्रुतिर्भवेद्ब्रह्म रसायनास्पदम् ॥४४॥ महा महो भूर्मणिकर्णिका स्थलीतमस्तातिर्यत्र समेति संक्षयम् । परः शतैर्जन्म भिरेधितापिया दिवाकराग्नींदु करैर निग्रहा ॥ ४५ ॥ किमु निर्वाण पदस्य भद्र पीठं मृदुलं तल्पमथो नु मोक्ष लक्ष्म्याः । अथवा मणिकर्णिकास्थली परमानंद सुकंद जन्म भूमिः ॥ ४६ ॥ समतीत विमुक्त जन्तु संख्या क्रियते यत्र जनैः सुखोपविष्टैः । विलसद्युति सूक्ष्म शर्कराभिः स्व वपुः पात महोत्सवाभिलाषैः ॥ ४७ ॥

इति चतुश्चत्वारिंशोऽध्यायः ॥४४॥

प्रभूरुष्टोपि सद्भृत्ये जीविका मात्र हारकः । काशीहरेत्कराद्भ्रष्टा पुरुषार्थ चतुष्ट यम् ॥२२॥ नाद्यापि काशीं संत्यज्य तदारभ्य महामुने । योगिन्योन्यत्र तिष्ठंति चरन्त्योपि जगन्त्रयम् ॥ २३ ॥ कः काशीं प्राप्य दुर्बुद्धि रपरत्रयियिया सति । मोक्ष निक्षेपकलशीं तुच्छ श्री कृत मानसः ॥२५॥ विमुखोपीश्वरो स्माकं काशी सेवन पुण्यतः । संमुखो भविता पुण्यं कृत कृत्यास्मत द्वयम् ॥ २६ ॥

इति पंचचत्वारिंशोऽध्यायः ॥४५॥

अवाप्य काशीं दुष्प्रापां को जहाति स चेतनः । रत्नं करस्थ मुत्सृज्य कः काचं संजि घृक्षति ॥ ३८ ॥ वाराणसीं समुत्सृज्य यस्त्व न्यत्र यियासति । हत्वा निधानं पादेन सोर्थमि च्छति भिक्षया ॥ ३९ ॥ पुत्र मित्र कलत्राणि क्षेत्राणि च धनानि च । प्रति जन्मेह लभ्यंते काश्येका नैव लभ्यते ॥४०॥ येन लब्धा पुरी

काशी त्रैलोक्योद्धरणक्षमा । त्रैलोक्यैश्वर्य दुष्प्रापं तेन लब्धं महा सुखम् ॥ ४१ ॥ सूर्योप रागे लोलार्के स्नान दानादिकाः क्रियाः । कुरु क्षेत्राद्दशगुणा भवंतीह न संशयः ॥ ५४ ॥ ना र्थवादोय मुदितः स्तुतिवादो न वै मुने । सत्यं य थार्थ वादोयं श्रद्धे यः सद्भिरादरात् ॥६२॥ यत्र विश्वेश्वरः साक्षाद्यत्र स्वर्ग तरंगिणी । मिथ्या तत्रानुमन्यंते तार्किकाश्चानुसूयकाः ॥ ६३ ॥ उ दाहरंति ये मूढाः कुतर्क बल दर्पिताः । काश्यां सर्वैर्थं वादोयं ते विट् कीटा युगे युगे ॥ ६४ ॥ कस्य चित् काशितीर्थस्य महिम्नो महतस्तुलां । ना धिरोहेन्मुने नून मपि त्रैलोक्य मंडपः ॥६५॥ नास्तिका वेदबाह्याश्च शिश्नोदरपरायणाः । अंत्यजाताश्च ये तेषां पुरः काशी न वर्ण्य ताम् ॥ ६६ ॥ ॥ ॥ ॥

इति षट्चत्वारिंशोध्यायः ॥ ४६ ॥

न केवलं हि पापेभ्यो वाराणस्यां विमुच्यते। प्राकृतेभ्यो पिपापेभ्यो मुच्यते शंकराज्ञया ॥

॥४२॥ सन्निहत्यां कुरुक्षेत्रे यत्पुण्यं राहुदर्शने।
तत्पुण्यं रविसप्तम्यां माघे काश्यां न संशयः॥
॥ ५२ ॥ ॥ ॥ ॥ ॥

इति अष्टचत्वारिंशोध्यायः ॥ ४८ ॥

रविरुवाच ॥ देव देव जगतांपते विभो भर्ग भीम भव चन्द्रभूषण। भूतनाथ भव भीति हारक त्वां नतोस्मि नत वाञ्छितप्रद ॥४६॥ चन्द्रचूड मृड धूर्जटे हर त्र्यक्ष दक्ष शततं तुशातन। शांत शाश्वत शिवापते शिव त्वां नतोस्मि नत वांछितप्रद ॥४७॥ नील लोहित समीहितार्थदद्व्येक् लोचन विरूप लोचन। व्योमकेश पशुपाश नाशन त्वां नतोस्मिनत वाञ्छितप्रद ॥४८॥ वामदेव शितिकंठ शूलभृ च्चन्द्रशेखर फणीन्द्र भूषण। कामकृत् पशुपते महेश्वर त्वां नतोस्मिनत वाञ्छितप्रद ॥४९॥ त्र्यंबक त्रिपुरसूदनेश्वर त्राणकृत् त्रिनयन त्रयी मय। कालकूटदलनांतकांतक त्वां नतोस्मिनत वाञ्छितप्रद ॥५०॥ शर्वरी रहित शर्व सर्वग

स्वर्ग मार्ग सुखदापवर्गद । अंधकासुररिपो कप
र्दभृत्वां नतोस्मिनत वाञ्छितप्रद ॥ ५१ ॥
शंकरोग्र गिरिजापते पते विश्वनाथ विधि
विष्णु संस्तुत । वेदवेद्य विदिताखिलेंगित त्वां
नतोस्मिनत वाञ्छितप्रद ॥ ५२ ॥ विश्वरूप
पररूप वर्जित ब्रह्म जिह्म रहिताम्रतप्रद । वा
ङ्मनोविषय दूरदूरग त्वां नतोस्मिनत वाञ्छि
तप्रद ॥ ५३ ॥ रविरुवाच ॥ देवि त्वदीयचर
णांबुजरेणुगौरीं भालस्थलीं वहति यः प्रणति
प्रवीणः । जन्मान्तरेपि रजनीकर चारु लेखा
तां गौरयत्य तितरां किल तस्य पुंसः ॥ ५५ ॥
श्रीमंगले सकलमंगल जन्मभूमे श्री मंगले सक
ल कल्मष तूल वन्हे । श्रीमंगले सकल दानव
दर्पहंत्रि श्रीमंगलेऽखिलमिदं परिपाहि विश्वं ५६
विश्वेश्वरि त्वमसि विश्वजनस्य कर्त्री त्वं पाल
यि ऽयसि तथा प्रलये पि हंत्री । त्वन्नाम कीर्तन
समुल्लसदच्छपुण्या स्रोतस्विनी हरति पातक
कूलवृक्षान् ॥ ५७ ॥ मातर्भवानि भवती भव

तीव्र दुःख संभार हारिणि शरण्य मिहास्तिना
न्या। धन्यास्त एव भुवनेषु त एव मान्या येषु
स्फुरेत्तव शुभः करुणा कटाक्षः ॥ ५८ ॥ येत्वां
स्मरंति सततं सहज प्रकाशां काशी पुरी स्थिति
मतीं नतमोक्षलक्ष्मीम् । तान् संस्मरेत्स्मरहरो
धृत शुद्ध बुद्धीन्निर्वाण रक्षण विचक्षण पात्र भूता
न् ॥५९॥ मातस्तवांघ्रि युगलं विमलं हृदिस्थं
यस्यास्ति तस्य भुवनं सकलं करस्थम्। यो नाम
ते जपति मंगल गौरि नित्यं सिद्ध्यष्टकं न परिमुं
चति तस्य गेहम् ॥ ६० ॥ त्वंदेवि वेद जननी
प्रणव स्वरूपा गायत्र्यसि त्वमसि वै द्विज काम
धेनुः । त्वं व्याहृति त्रयमिहाखिल कर्म सिद्धौ
स्वाहा स्वधा सि सुमनः पितृ तृप्ति हेतुः ६१
गौरि त्वमेव शशि मौलिनि वेधसि त्वं सावि
त्र्यसि त्वमसि चक्रिणि चारु लक्ष्मीः। काश्यां
त्वमस्य मल रूपिणि मोक्ष लक्ष्मी स्त्वं मे शरण्य
मिह मंगलगौरि मातः ॥ ६२ ॥

इति एकोनपंचाशंततमोध्यायः ॥४९॥

तावत् पापानि जृंभंते नाना जन्मार्जि
तान्यपि। यावत्काशी न हृत्संस्था पुनर्भव विघा
तिनि ॥ १२७ ॥ काशी स्मरण मात्रेण किं
चित्रं यदघं हरेत् । गर्भवासोपि नश्येत विश्वे
शानुग्रहात्परात् ॥१२८॥ यत्र विश्वेश्वरः सा
क्षात्तारापति विभूषणः । तारयेत्तारकद्रोण्या
दुस्तराद्भव सागरात् ॥ १२९ ॥ विश्वेशानुगृ
हीतानां विच्छिन्नाखिल कर्मणाम् । भवत्काशीं
प्रतिमतिर्नैतरेषां कदाचन ॥ १३० ॥ काशीं
प्रति मनो येषां निःशेषक्षालितैनसाम् । त एव
मानवा लोके सत्यं नृपशवो परे॥ १३१ ॥ तै
रेव कालो विजितस्त एव हि गते नसः। अ
पुनर्गर्भवासास्ते प्राप्ता वाराणसीह यैः १३२
श्रेयसां भाजनं चैतन्नृजन्मन मुधा नयेत् ।
देवाना मपि दुष्प्राप्यं काशी संदर्शनादृते ॥
॥ १३३ ॥ कः कलिः कोथवा कालः किंवा
कर्माण्य नेकधा । परानंद प्रदं क्षेत्रमविमुक्तं
यदीक्षितम् ॥ १३४॥ ते गर्भवासे तिष्ठंति पुन

स्ते गर्भ वासिनः। ये न गर्भवनच्छेत्रीं सेवंते वरणामसिम् ॥ १३५ ॥

इति पंचाशत्तमोध्यायः ॥ ५० ॥

अगस्ते रथ सप्तम्यां रविवारो यदाप्यते॥ तदा पादोदके तीर्थे आदिकेशव सन्निधौ ॥ ॥ ७६ ॥ स्नात्वोषसि नरो मौनी केशवादित्य पूजनात्। सप्तजन्मार्जितात्पापान्मुक्तो भवति तत्क्षणात् ॥ ७७ ॥ यद्यज्जन्म कृतं पापं मया सप्तंसु जन्मसु। तन्मे रोगं च शोकं च माकरीहंतु सप्तमी ॥ ७८ ॥ एतज्जन्म कृतं पापं यच्च जन्मांतरार्जितम्। मनोवाक्कायजं यच्च ज्ञाता ज्ञाते च ये पुनः ॥७९॥ इति सप्तविधं पापं स्नानान्मे सप्त सप्तिके। सप्तव्याधि समायुक्तं हरमाकरि सप्तमी॥ ८० ॥

इति एकपंचाशत्तमोध्यायः ॥ ५१ ॥

हंसया न फलं मेद्य जातं काशी समागमे। काशी प्राप्तौ यतः प्रोक्ता अंतरायाः पदे पदे ॥१८॥ दशिधातुरभूदद्यमदशौ प्राप्य सान्वयः।

स्पष्टं दृष्टि पथे प्राप्ता यदेषानन्द वाटिका ॥ १९ ॥ वरं तृणानि धान्यानि तानिवात्याह तान्यपि । काश्यांयान्या पतंतीह न जनाः काश्य दर्शनाः ॥ २६ ॥ अद्य मे सफलं चायुः परार्द्ध द्वय संमितम् । यस्मिन् सति मया प्रापि दुष्प्रापा काशिका पुरी ॥ २७ ॥ अहो मे धर्म संपत्तिरहो मे भाग्य गौरवम् । यदद्राक्षिषमद्याहं काशीं सुचिरचिंतिताम् ॥ २८ ॥ अद्य मे स्वतपो वृक्षो मनोरथ फलैरलम् । शिवभक्त्यंबुनासिक्तः फलितोति बृहत्तरैः ॥ २९ ॥ मया व्यधायि बहुधा सृष्टिः सृष्टिं वितन्वता । परमन्यादृशी काशी स्वयं विश्वेश निर्मितिः ॥ ३० ॥ महिमानं परं काश्याः कोपि वेद न भूपते । ऋते त्रिनयनाच्छंभो सर्व ज्ञान प्रदायिनः ॥ ४७ ॥ पुरारुद्रसरो नाम तत्तीर्थं कलशोद्भव । दशाश्वमेधिकं पश्चाज्जातं विधि परिग्रहात् ॥ ६९ ॥ स्वर्धुन्यथ ततः प्राप्ता भगीरथ समागमात् । अतीव पुण्यवज्जातमत

स्तत्तीर्थमुत्तमम् ॥ ७० ॥ विधिर्दशाश्वमेधेशं लिंगं संस्थाप्य तत्र वै स्थितवान्नगतोद्यापि क्वापि काशीं विहायतु ॥ ७१ ॥ परातनुरियं काशी विश्वेशस्येति निश्चितम् । अस्याः संसेवनाच्छंभुर्न कुप्यति पुरोमपि॥७४॥ कः प्राप्य काशीं दुर्मेधाःपुनस्त्यक्तुमिहे हते।अनेक जन्म जनित कर्म निर्मूलन क्षमाम् ॥ ७५ ॥ विश्व संताप संहर्तुः स्थाने विश्वपतेस्तनुः । संताप्य तेतरां काश्या विश्लेषज महाग्निना ॥ ७६ ॥ प्राप्य काशींत्यजेद्यस्तु समस्ताघौघ नाशिनीं। नृपशुः स परिज्ञेयो महा सौख्य पराङ् मुखः ॥ ॥ ७७ ॥ निर्वाण लक्ष्मीं यः काङ्क्षे त्यक्त्वा संसार दुर्गतिम्। तेन काशी न संत्याज्यायद्याप्त्यै शादनुग्रहात् ॥ ७८ ॥ यः काशीं संपरित्यज्य गच्छेदन्यत्र दुर्मतिः । तस्य हस्त तलाद्गच्छेच्चतुर्वर्ग फलोदयः ॥ ७९ ॥ निवर्हणीमघौघस्य सुपुण्य परिबृंहिणीम्। कः प्राप्य काशीं दुर्मेधास्त्यजेन्मोक्ष सुख प्रदाम् ॥ ८० ॥ सत्यलोके

क्व तत्सौख्यं क्व सौख्यं वैष्णवे पदे ॥ यत्सौख्यं लभते काश्यां निमेषार्धं निषेवणात् ॥ ८१ ॥ मित्रा वरुणयोः पुत्र महिमानं ब्रवीमिते । काश्यां दशाश्वमेधस्य सर्व तीर्थ शिरोमणेः ॥ ८३ ॥ दशाश्वमेधिकं प्राप्य सर्व तीर्थोत्तमोत्तमम् । यत्किंचित् क्रियते कर्म तदक्षय मिहेरितम् ॥ ॥ ८४ ॥ ॥ ॥ ॥ ॥ ॥

इति द्विपंचाशत्तमोध्यायः ॥ ५२ ॥

पुरीसायादृशी काशी वशी करण भूमिका । न तादृशी दृशी हासीत्क चिन्मे प्रायशो ध्रुवम् ॥३॥ यो योयाति पुरीं तांतुस स तत्रैव तिष्ठति । अभूवन्ननु योगिन्योऽयोगिन्यः काशि संगताः ॥ ४ ॥ अहो मोहस्य माहात्म्यमहो भाग्य विपर्ययः । निर्वाण राशिं यत्काशीं प्राप्य यांत्यन्यतो बुधाः ॥ १८ ॥ तत्यजेयैरियं काशी महाशीर्वाद भूमिका । तेषां करतलान्मुक्तिः प्राप्तापि परितो गता ॥ १९ ॥ यत्र सर्वाव भृथतः स्नान मात्रं विशिष्यते । अप्यूष्णी कृत

पानीयैस्तां काशीं कः परित्यजेत् ॥ २० ॥
यत्रैक पुष्प दानेन शिव लिंगस्य मूर्धनि । दश
सौवर्णिकं पुण्यं कस्तां काशीं परित्यजेत्॥२१॥
यत्र दंड प्रणामेन अप्येकेन शिवाग्रतः । तुच्छ
मैन्द्र पदं प्राहुस्तां काशीं को विमुंचति ॥ २२॥
यत्रैक द्विजमात्रं तु भोजयित्वा यथेच्छया । वा
जपेयाधिकं पुण्यं तां काशीं को विमुंचति २३
एकांगां यत्र दत्वा वै विधिं वद्ब्राह्मणाय वै । लभे
दयुत गो पुंण्यं कस्तां काशीं त्यजेत्सुधीः ॥२४॥
एकं लिंगं प्रतिष्ठाप्य यत्र संस्थापितं भवेत् ।
अपि त्रैलोक्यमखिलं तां काशीं कः समुज्झति ॥
॥ २५ ॥ परि निश्चित्य तावित्थं लिंगे संस्थाप्य
पुण्यदे । तत्रैव संस्थितिं प्राप्तौ काशीं नाद्यापि
मुंचतः ॥ २६ ॥ शंकु कर्णेश्वरं लिंगं शंकु कर्ण
गणार्चितम् । दृष्ट्वा न जायते जंतुर्ज़ातु मातुर्म
होदरे ॥ २७ ॥ विश्वेशाद्वायुदिग्भागे शंकु क
र्णेश्वरं नरः । संपूज्यन विशेदत्र घोरे संसार
सागरे ॥ २८॥ महोदरेश्वरं दृष्ट्वा वाराणस्यां

द्विजोत्तम । कदाचिदपि वै मातुः प्रविशेन्नोदरीं दरीम् ॥ ३६ ॥ घंटाकर्ण ह्रदे स्नात्वा दृष्ट्वा व्यासेश्वरं विभुम् । यत्र कुत्र विपन्नोपि वाराणस्यां मृतो भवेत् ॥ ३७ ॥ उवाच चमनस्येव हरः स्मित्वा पुनः पुनः ॥ महामोह न विद्यासि काशि त्वां पर्यवैम्यहम् ॥ ४३ ॥ पुरा विदः प्रशंसंति त्वां महा मोह हारिणीम् । काशीं त्विति न जानंति महामोह न भूरियम् ॥ ४४ ॥ स्नापयित्वा विधानेन यो लिंगस्नपनोदकम् । त्रिः पिवेत्त्रिविधं पापं तस्येहाशु प्रणश्यति ॥ ॥ ७३ ॥ अपास्य सोदरांदारान्पुत्रं क्षेत्रं गृहं वसु । अप्यंगीकृत्य निधनं सर्वे काशीमुपासते ॥ ८५ ॥ मरणादपिनो काश्यां भयं यत्र म नागपि । गणास्तत्र तु तिष्ठंतः कुतो मत्तोपि बिभ्यति ॥ ८६ ॥ मरणं मंगलं यत्र विभूति यंत्र भूषणम् । कौपीनं यत्र कौशेयं काशी कुत्रो पमीयते ॥८७॥ निर्वाण रमणी यत्र रंकं वाऽरंक मेव वा । ब्राह्मणं वाश्वपाकं वा वृणी ते प्रांत्य

भूणषम् ॥८८॥ मृतानां यत्र जंतूनां निर्वाण पदमृच्छतां। कोट्यंशे नापि न समा अपि शक्रा दयः सुराः ॥८९॥ यत्र काश्यां मृतो जंतुर्ब्रह्म नारायणादिभिः। प्रबद्ध मूर्द्धां जलिभिर्नमस्ये ताति यत्नतः ॥ ९० ॥ यत्र काश्यां शवत्वेपि जंतुर्ना शुचितां व्रजेत्। अतस्तत्क्षण संस्पर्शं करोम्यहमपि स्वयम् ९१ यस्तु काशीति काशी ति द्विस्त्रिर्जपति पुण्यवान्। अपि सर्व पवित्रेभ्यः स पवित्रतरो महान् ९२ येन काशी हृदि ध्याता येन काशिह सेविता॥ तेनाहं हृदि संध्यातस्तेनाहं सेवितः सदा ॥९३॥ काशीं यः सेवते जंतुर्नि र्विकल्पेन चेतसा। तमहं हृदये नित्यं धारयामि प्रयत्नतः ॥ ९४ ॥ स्वयं वस्तुमशक्तोपि वास येत्तीर्थ वासिनम्। अप्येकमपि मूल्येन स व स्तुः फल भाग्ध्रुवम् ॥९५॥ काश्यां वसंति ये धीरा आपंचत्व विनिश्चयाः। जीवन्मुक्तास्तुते ज्ञेया वंद्याः पूज्यास्त एव हि ॥ ९६ ॥ अना कलित पुण्यानां परिक्षीण धनायुषाम्। सर्वोपाय

विहीनानां गतिर्वाराणसी पुरी ॥ ११२ ॥ अपुण्य भार खिन्नानां पश्चात्तापमुपे युषां । विष्वगूर्ध्वगतीनां च गतिर्वाराणसी पुरी॥११३॥ स्वामिद्रुह कृतघ्नाश्च ये च विश्रंभघातकाः । तेषां क्वापि गतिर्नास्ति मुक्त्वा वाराणसीं पुरीम् ॥११४॥ चित्रं न चित्रगुप्तोपि वेत्ति वाराणसी स्थितान् । जंतून्कागणनान्येषां मर्त्यलोक निवासिनां ॥ ११७ ॥ अविच्छिन्न प्रभावाणाम परिच्छिन्न तेजसां । कृत लिंग प्रतिष्ठानां नांतं प्राप्नोति धर्मराट् ॥ ११८ ॥ विंदतीशं नरोभ्यर्च्य भीमचंडी समीपतेः । त्यक्त्वा प्रचंडमप्येनो मोक्षं विंदति शाश्वतम्॥ १२७ ॥ * ॥

इति त्रिपंचाशत्तमोध्याय ॥ ५३ ॥

कपर्दीनाम गणपः शंभोरत्यंत वल्लभः। पित्रीशादुत्तरे भागे लिंगं संस्थाप्य शांभवम् ॥ २ ॥ कुंडं चखान तस्याग्रे विमलोदक संज्ञितं। यस्य तोयस्य संस्पर्शाद्विमलो जायते नरः ॥३॥ एकः पाशुपत श्रेष्ठो वाल्मीकिरिति संज्ञितः ।

तपश्चचार स मुनिः कपर्दीशं समर्चयन् ॥५॥
प्रतिष्ठानाभिधानोस्ति देशो गोदावरी तटे ।
तीर्थ प्रतिग्रह रुचिस्तत्रासं ब्राह्मणस्त्वहम् २७
पर्वण्यदत्त दानाये कृत तीर्थ प्रतिग्रहाः । तइमां
योनि मृच्छंति महादुःख निबंधनीम् ॥ ३१ ॥
भालं विभूति धवलं विलोक्य यम किंकराः ।
पापिनोपि पलायंते भीताः पाशुपतास्त्रतः ६२
अस्थि ध्वजांकितं दृष्ट्वा यथा पांथा जलाशयं ।
दूरयंति तथा भस्म भालां कं यम किंकराः॥६३॥
तस्मात्कंदर्य योनित्वादतीव परि निंदितात् ।
अस्य तीर्थस्य माहात्म्याद्दिव्यं देहमवाप्तवान्
॥ ७३ ॥ पिशाचमोचनं तीर्थ मद्यारभ्य समा
ख्यया । अन्येषामपि पैशाच्यमिदंस्नानाद्धरि
ष्यति ॥ ७४ ॥ अस्मिँस्तीर्थे महा पुण्ये ये
स्नास्यंतीहं मानवाः । पिंडाँश्च निर्वपिष्यन्ति
संध्या तर्पण पूर्वकम् ॥ ७५ ॥ दैवात्पैशाच्य
मापन्नास्तेषां पितृ पितामहाः । तेपि पैशाच्य
मुत्सृज्य यास्यंति परमां गतिम् ॥ ७६ ॥

अद्य शुक्ल चतुर्दश्यां मार्गे मासि तपोनिधे । अत्र स्नानादिकं कार्यं पैशाच्य परिमोचनम् ॥ ॥ ७७ ॥ इमां सांवत्सरीं यात्रां ये करिष्यंति मानवाः । तीर्थं प्रतिगृह्यत्पापान्निःसरिष्यंति ते नराः ॥७८॥ पिशाचमोचने स्नात्वा कपर्दीशं समर्च्य च । कृत्वा तत्रान्नदानंच नरोन्यत्रा पि निर्भयाः ॥ ७९ ॥ मार्ग शुक्ल चतुर्दश्यां क पर्दीश्वर संनिधौ । स्नात्वान्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः ॥८०॥ पैशाच मोचने तीर्थे संभोज्य शिव योगिनम् । कोटि भोज्य फलं सम्यगेकैक परिसंख्यया ॥८४॥ श्रुत्वा ध्याय मिमं पुण्यं नरो नियत मानसः । भूतैः प्रेतैः पिशाचैश्च कदाचिन्नाभि भूयते ॥८५॥ बाल ग्रहाभि भूतानां बालानां शांति कारकम् । पठ नीयं प्रयत्नेन महाख्यानमिदं परम् ॥ ८६ ॥ इदमाख्यानमाकर्ण्य गच्छन्देशान्तरं नरः। चोर व्याघ्र पिशाचाद्यैर्नाभि भूयेत कुत्र चित्॥८७॥

इति चतुष्पंचाशत्तमोध्यायः ॥ ५४ ॥

विराधेश्वरमाराध्य विराध गण पूजितं।
सर्वापराध युक्तोपि नापराध्यति कुत्र चित् २२
दिने दिने पराधोयः क्रियते काशि वासिभिः। स
याति संक्षयं क्षिप्रं विराधेश समर्चनात् २३
नैर्ऋते दण्डपाणेस्तु विराधेशं प्रयत्नतः। न
त्वा सर्वापराधेभ्यो मुच्यते नात्र संशयः ॥२४॥
सुमुखेशं महालिंगं सुमुखाख्य गणार्चितम्।
पश्चिमा भिमुखं लिंगं दृष्ट्वा पापैः प्रमुच्यते
॥ २५ ॥ ध्रुवं काश्यां प्रविष्टाये ते प्रविष्टा ममो
दरे। तेषां विनिर्गमो नास्ति दीप्तेग्नौ हविषा
मिव ॥ ३३ ॥ येषां हि संस्थितिः काश्यां
लिंगार्चनरतात्मनां। त एव मम लिंगानि जं
गमानि न संशयः ॥ ३४ ॥ स्थावरा जगमाः
काश्यामचेतन सचेतनाः। सर्वे ममैव लिंगानि
तेभ्यो द्रुह्यंति दुर्धियः ॥३५॥ वाचि वाराणसी
येषां श्रुतौ वैश्वेश्वरी कथा। त एव काशी लिं
गानि वराण्यर्च्यान्यहं यथा ॥३६॥ वाराणसी
ति काशीति रुद्रावास इति स्फुटं। मुखाद्विनि

गतं येषां तेषां न प्रभवेद्यमः ॥ ३७ ॥ आनंद
काननं प्राप्य ये निरानंद भूमिकां । अन्यां ह
दापि वांच्छंति निरानंदाः सदात्रते ॥ ३८ ॥
अद्यैव वास्तु मरणं वहुकालांतरेपि वा । कलि
कालभिया पुंसां काशी त्याज्या न कर्हि चित्
॥ ३९ ॥ अवश्यं भाविनो भावा भविष्यंति
पदे पदे । स लक्ष्मी निलयां काशीं ते त्यजंति
कुतोधियः ॥ ४० ॥ वरं विघ्न सहस्राणि सोढ
व्यानि पदे पदे । काश्यां नान्यत्र निर्विघ्नं वांच्छे
द्राज्यमपि क्व चित् ॥४१॥ कियन्निमेषसंभोग्याः
संति लक्ष्म्याः पदे पदे । परं निरंतर सुखाऽमु
त्राप्यत्रापि काशिका ॥ ४२ ॥ विश्वनाथोह्यहं
नाथः काशिका मुक्ति काशिका । सुधातरंगा
स्वर्गंगा चय्येषाकिन्न यच्छति ॥ ४३ ॥ पंच
क्रोश्यापरिमिता तनुरेषा पुरी मम । अविच्छि
न्न प्रमाणर्धिर्भक्त निर्वाण कारणम् ॥ ४४ ॥
संसार भार खिन्नानां यातायात कृतां सदा ।
एकैव मे पुरी काशी ध्रुवं विश्राम भूमिका ॥४५॥

मंडपः कल्पवल्लीनां मनोरथ फलैरलम् । फलितः काशिकाख्यो यं संसाराध्वजुषां सदा ॥ ४६ ॥ चक्रवर्तेरियं छत्रं विचित्रं सर्व ताप हृत् । काशी निर्वाण राज्यस्य मम शूलोच्च दंडव त् ॥ ४७ ॥ निर्वाण लक्ष्मीं ये पुण्याः परिवां च्छंति लीलया । निरंतर सुख प्राप्त्यै काशी त्याज्यानतैर्नृभिः ॥ ४८ ॥ ममानंद वने ये वै निरंतर वनौक सः । मोक्ष लक्ष्मी फलान्यत्र सु स्वादूनि लभंति ते ॥ ४९ ॥ निर्ममंचापि नि र्मोहं यामामपि विमोहयेत् । कैर्न संस्मरणीया सा काशी विश्व विमोहिनी ॥ ५० ॥ नामापि मधुरं यस्याः परानंद प्रकाशकम् । काश्याः का शीति काशीति सा कैः पुण्यैर्न जप्यते ॥५१॥ काशी नाम सुधा पानं ये कुर्वन्ति निरंतरम् । तेषां वर्त्म भवत्येवं सुधामवसुधा मयम् ॥५२॥ ममता रहितस्यापि मम सर्वात्मनो ध्रुवम् । त एव मामका लोके ये काशी नाम जापकाः॥ ॥ ५३ ॥ ॥ ॥ * ॥ ॥ ॥

इति पंचपंचाशत्तमोध्यायः ॥५५॥

श्रीकंठ उवाच ॥ जय विघ्न कृतामाद्य भक्त निर्विघ्न कारक । अविघ्न विघ्न शमनमहा विघ्नैक विघ्न कृत् ॥१७॥ जय सर्व गणाधीश जय सर्व गणाग्रणीः । गण प्रणत पादाब्ज गण नातीत सद्गुण ॥ १८ ॥ जय सर्वग सर्वेश स र्व बुद्ध्येक शेवधे । सर्व माया प्रपंचज्ञ सर्व कर्माग्र पूजित ॥ १९ ॥ सर्व मंगल मांगल्य जय त्वं सर्व मंगल । अमंगलोपशमन महा मंगल हेतु क ॥ २० ॥ जय सृष्टि कृतां वंद्य जय स्थिति कृतानत । जय संहृति कृत्स्तुत्य जय सत्कर्म सि द्धिद ॥ २१ ॥ सिद्ध वंद्य पदांभोज जय सिद्धि विधायक । सर्व सिद्ध्येक निलय महा सिद्ध्यद्धि सूचक ॥ २२ ॥ अशेष गुण निर्माण गुणातीत गुणागूणीः । परिपूर्ण चरित्रार्थ जय त्वं गुण वर्णि त ॥ २३ ॥ जय सर्व बलाधीश बलाराति बल प्रद । बलाकोज्वलदन्ताग्र बाला बाल पराक्रम ॥ २४ ॥ अनंत महिमाधारं धराधर विदारण ।

दंताग्र प्रोत दिङ्नाग जय नाग विभूषण ॥
॥ २५ ॥ ये त्वां नमंति करुणामय दिव्य मूर्ते
सर्वै न सामपि भुवो भुवि मुक्ति भाजः । तेषां
सदैव हरसीह महोपसर्गात्स्वर्गापवर्गमपि सं
प्रददासि तेभ्यः ॥२६॥ ये विघ्नराज भवता
करुणा कटाक्षैः संप्रेक्षिता क्षितितले क्षणमात्र
मत्र । तेषां क्षयंति सकलान्यपि किल्विषाणि
लक्ष्मीः कटाक्ष यतितान्पुरुषोत्तमान्हि ॥२७॥
ये त्वां स्तुवंति नत विघ्न विघातदक्ष दाक्षायणी
हृदय पकंज तिग्मरश्मे । श्रूयंत एव तइह प्र
थितान चित्रं चित्रं तदत्र गणपायदहोत एव
॥ २८ ॥ ये शीलयंति सततं भवतोंघ्रि युग्म
ते पुत्र पौत्र धन धान्य समृद्धि भाजः । शंसी
लितांघ्रिकमला बहुभृत्यवर्गैर्भूपाल भोग्य कमलां
विमलां लभंते ॥ २९ ॥ त्वं कारणं परम कार
णकारणानां वेद्योसि वेद विदुषां सततं त्वमेकः ।
त्वं मार्गणीय मसि किं च नमूल वाचां वाचा
मगोचर चराचर दिव्य मूर्ते ॥ ३० ॥ वेदा

विंदंति न यथार्थतया भवंतं ब्रह्मादयोपि न चराचर सूत्र धार। त्वं हंसि पासि विदधासि स मस्त मेकः कस्तेस्तुति व्यति करो मनसाप्यग म्य ॥ ३१ ॥ त्वद्दुष्ट दृष्टि विशिखैर्निहतान्नि हन्मिदैत्यान्पुरांधक जलंधर मुख्यकांश्च । क स्यास्ति शक्तिरिहयस्त्वदृतेपि तुच्छं वांछेद्विधातु मिह सिद्धिद कार्य जातम् ॥ ३२ ॥ अन्वेषणे ढुंढिरयं प्रथितोस्ति धातुः सर्वार्थ ढुंढिततया तव ढुंढि नाम । काशी प्रवेशमपि को लभते त्र देही तोषं विना तव विनायक ढुंढिराज ३३ ढुंढे प्रणम्य पुरतस्तव पाद पद्मं योमां नमस्यति पुमानिह काशिवासी । तत्कर्ण मूलमधिगम्य पुरादिशामि तत्किंचिदत्र न पुनर्भवितास्ति ये न ॥ ३४ ॥ स्नात्वा नरः प्रथमतो मर्णिकणिका यामुद्धूलितांघ्रि युगलस्तु सचैलमाशु । देवर्षि मानव पितॄनपि तर्पयित्वा ज्ञानोदतीर्थमभिल भ्य भजेततस्त्वाम् ॥ ३५ ॥ सामोद मोदक भरैर्वरधूपदीपैर्माल्यैः सुगंध बहुलैरनुलेपनैश्च।

